***प्रथम संस्कृत संस्करण :*** अगस्त 2015 श्रावण 1937
***पुनर्मुद्रण :*** जुलाई 2020 श्रावण 1942


PD 153T RPS

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक (संस्कृत)** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन, सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत*, दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत*, संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर*, साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष*, संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक*, सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर*, व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक*, केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष*, संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष*, प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा प्रिंट पैक इंडिया, डी-12, सेक्टर बी-3, ट्रॉनिका सिटी इंडस्ट्रियल एरिया, लोनी, गाज़ियाबाद- 201 102 (उ.प्र.) द्वारा मुद्रित।

ISBN 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-378-0

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः - 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# बबल्याः वाद्यम्



पिता



बबली



माता





एकदा बबल्याः गृहे परिमार्जनं भवति स्म।
गृहस्य सर्वाणि वस्तूनि अङ्गने स्थापितानि आसन्।
पाकशालायाः वस्तूनि अपि बहिः आसन्।





पाकशालायाः वस्तुषु बहूनि संपुटकानि आसन्।
बबली संपुटक–समूहस्य निकटे उपाविशत्।
बबली स्वकृते एकं नीलं संपुटकं धृतवती।





बबली संपुटकं दोलितवती।
संपुटके दोलायिते सति छन्–छन्–ध्वनिः निस्सृतः।
बबली संपुटकं पुनः पुनः अवादयत्।







संपुटकं वादयन्ती बबली गृहे सर्वत्र भ्रमितवती।
बबली अचिन्तयत् यत् संपुटके किं भवितुम् अर्हति।
सा संपुटकम् उद्घाट्य अपश्यत्।





संपुटके तण्डुलकणाः आसन्।
बबली संपुटकं पिहितवती।
पर्वूवत् सा तत् वादयन्ती आसीत्।







बबली संपुटकम् आदाय सुप्ता।
रात्रौ बबल्याः शय्यायाम् एकः मूषकः आगतः।
मूषकः संपुटके स्थितान् सर्वान् तण्डुलकणान् अखादत्।



प्रातः बबली अपश्यत् यत् संपुटकम् उद्घाटितं वर्तते।
तण्डुल-कणाः तत्र न आसन्।
सा मातरम् अन्यान् तण्डुलकणान् अयाचत।







माता तण्डुलान् दातुम् अपाकृतवती।
माता अवदत् – “तण्डुलकणाः क्रीडनाय न भवन्ति।”
तण्डुलाः भोजनार्थम् एव भवन्ति।





बबली अधिकम् उदासीना अभवत्।
सा छद्याः उपरि गत्वा उपाविशत्।
तत्र प्रक्षालितानि वस्त्राणि शुष्कतार्थं स्थापितानि आसन्।







बबल्याः दृष्टिः सलवारस्य उपरि पतिता।
वस्त्रस्य नीवी लम्बमाना आसीत्।
बबली एकम् उपायं चिन्तितवती।







बबली नीवीम् आकृष्य निष्कासितवती।
सा नीव्याः एकं प्रान्तं संपुटके बद्धवती।
नीव्याः अपरं प्रान्तं संपुटकस्य अपरपार्श्वे योजितवती।





संपुटकं साम्प्रतं पटहः अभवत्।
बबली पटहस्य सूत्रं गले धृतवती।
सा पटहं वादयन्ती छद्याः उपरि नर्तितवती।





बबली पटहं वादयन्ती अधः आगच्छत्।
अधः तदानीम् अपि परिमार्जनकार्यं प्रचलति स्म।
वस्तूनि अधुना अङ्गने स्थापितानि आसन्।





माता संपुटकानि शोधयति स्म।
पिता संपुटकानि नीत्वा अन्तः स्थापयति स्म।
जीतः वस्तुषु किमपि अन्विष्यति स्म।





सर्वे जनाः बबल्याः पटहस्य ध्वनिं शृण्वन्ति स्म।
ढप्–ढप्–ढप्–ढप्–ढप्–ढप्–ढप्
बबली गीतमपि गायति स्म।

